



Sri Balaji Temple of Great Lakes
2567 Metro PKWY, St.Heights MI 48310
Telephone:(586) 826-8711
www.sribalajivediccenter.org

# Prayer Book

PURUSHA SUUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ पु॒रु॒षसू॒क्तम् ॥

॥ हरिः ओं ॥ स॒हस्र॑ शीर्षा॒ पुरु॑षः। स॒ह॒स्रा॒क्षः स॒हस्र॑पात्। स भूमिं॑ वि॒श्वतो॑ वृ॒त्वा। अत्य॑तिष्ठद्दशाङ्गु॒लम्। पुरु॑ष ए॒वेदग्ं सर्व॑म्। यद्भू॒तं यच्च॒ भव्य᳚म्। उ॒तामृ॑त॒त्वस्येशा॑नः। यदन्ने॑नाति॒रोह॑ति। ए॒तावा॑नस्य महि॒मा। अतो॒ ज्याया॑ग्श्च॒ पूरु॑षः॥ १ ॥

पादो᳚ऽस्य॒ विश्वा॑ भू॒तानि॑। त्रि॒पाद॑स्या॒मृतं॑ दि॒वि। त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः। पादो᳚ऽस्ये॒हाभ॑वा॒त्पुनः॑। ततो॒ विष्व॒ङ्व्य॑क्रामत्। सा॒श॒ना॒न॒श॒ने अ॒भि। तस्मा᳚द्वि॒राड॑जायत। वि॒राजो॒ अधि॒ पूरु॑षः। स जा॒तो अत्य॑रिच्यत। प॒श्चाद्भूमि॒मथो॑ पु॒रः॥ २ ॥

यत्पुरु॑षेण ह॒विषा᳚। दे॒वा य॒ज्ञमत॑न्वत। व॒स॒न्तो अ॑स्यासी॒दाज्य᳚म्। ग्री॒ष्म इ॒ध्मश्श॒रद्ध॒विः। स॒प्तास्या॑सन्परि॒धयः॑। त्रिस्स॒प्त स॒मिधः॑ कृ॒ताः। दे॒वा यद्य॒ज्ञं त॑न्वा॒नाः। अब॑ध्न॒न्पुरु॑षं प॒शुम्। तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्षन्॑। पुरु॑षं जा॒तम॑ग्र॒तः॥ ३ ॥

तेन॑ दे॒वा अय॑जन्त। सा॒ध्या ऋष॑यश्च॒ ये। तस्मा᳚द्य॒ज्ञात्स॑र्व॒हुतः॑। सम्भृ॑तं पृष॒दा॒ज्यम्। प॒शूग्स्ताग्श्च॑क्रे वाय॒व्यान्॑। आ॒र॒ण्यान्ग्रा॒म्याश्च॒ ये। तस्मा᳚द्य॒ज्ञात्स॑र्व॒हुतः॑। ऋच॒स्सामा॑नि जज्ञिरे। छन्दाग्ं॑सि जज्ञिरे॒ तस्मा᳚त्। यजु॒स्तस्मा॑दजायत॥ ४ ॥

तस्मा॒दश्वा॑ अजायन्त। ये के चो॑भ॒याद॑तः। गावो॑ ह जज्ञिरे॒ तस्मा᳚त्। तस्मा᳚ज्जा॒ता अ॑जा॒वयः॑। यत्पुरु॑षं॒ व्य॑दधुः। क॒ति॒धा व्य॑कल्पयन्। मु॒खं॒ किम॑स्य॒ कौ बा॒हू। कावू॒रू पादा॑वुच्येते। ब्रा॒ह्म॒णो᳚ऽस्य॒ मुख॑मासीत्। बा॒हू रा॑ज॒न्यः॑ कृ॒तः॥ ५ ॥

ऊ॒रू तद॑स्य॒ यद्वैश्यः॑। प॒द्भ्याग्ं शू॒द्रो अ॑जायत। च॒न्द्रमा॒ मन॑सो जा॒तः। चक्षो॒-स्सूर्यो॑ अजायत। मुखा॒दिन्द्र॑श्चा॒ग्निश्च॑। प्रा॒णाद्वा॒युर॑जायत। नाभ्या॑ आसीद॒न्तरि॑क्षम्। शी॒र्ष्णो द्यौस्सम॑वर्तत। प॒द्भ्यां भू॒मि॒र्दिश॒श्श्रोत्रा᳚त्। तथा॑ लो॒काग्ं अ॑कल्पयन्॥ ६॥

वेदा॒हमे॒तं पुरु॑षं म॒हान्त᳚म्। आ॒दि॒त्यव॑र्णं॒ तम॑स॒स्तु पा॒रे। सर्वा॑णि रू॒पाणि॑ वि॒चित्य॒ धीरः॑। नामा॑नि कृ॒त्वाऽभि॒वद॒न् यदास्ते᳚। धा॒ता पु॒रस्ता॒द्यमु॑दाज॒हार॑। श॒क्रः प्रवि॒द्वान्-प्र॒दिश॒श्चत॑स्रः। तमे॒वं वि॒द्वान॒मृत॑ इ॒ह भ॑वति। नान्यः पन्था॒ अय॑नाय विद्यते। य॒ज्ञेन॑ य॒ज्ञमय॑जन्त दे॒वाः। तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन्। ते ह॒ नाकं॑ महि॒मान॑स्सचन्ते। यत्र॒ पूर्वे॑ सा॒ध्यास्सन्ति॑ दे॒वाः॥ ७॥

अ॒द्भ्यस्सम्भू॑तः पृथि॒व्यै रसा᳚च्च। वि॒श्वक॑र्मण॒स्सम॑वर्त॒ताधि॑। तस्य॒ त्वष्टा॑ वि॒दध॑द्रू॒पमे॑ति। तत्पुरु॑षस्य॒ विश्व॒माजा॑न॒मग्रे᳚। वेदा॒हमे॒तं पुरु॑षं म॒हान्त᳚म्। आ॒दि॒त्यव॑र्णं॒ तम॑सः॒ पर॑स्तात्। तमे॒वं वि॒द्वान॒मृत॑ इ॒ह भ॑वति। नान्यः पन्था॑ विद्य॒तेऽय॑नाय। प्र॒जाप॑तिश्चरति॒ गर्भे॑ अ॒न्तः। अ॒जाय॑मानो बहु॒धा विजा॑यते॥ ८॥

तस्य॒ धीराः॒ परि॑जानन्ति॒ योनि᳚म्। मरी॑चीनां प॒दमि॑च्छन्ति वे॒धसः॑। यो दे॒वेभ्य॒ आत॑पति। यो दे॒वानां᳚ पु॒रोहि॑तः। पूर्वो॒ यो दे॒वेभ्यो॑ जा॒तः। नमो॑ रु॒चाय॒ ब्राह्म॑ये। रुचं॑ ब्रा॒ह्मं ज॒नय॑न्तः। दे॒वा अग्रे॒ तद॑ब्रुवन्। यस्त्वै॒वं ब्रा᳚ह्म॒णो वि॒द्यात्। तस्य॑ दे॒वा अस॒न्वशे᳚॥ ९॥

ह्रीश्च॑ ते ल॒क्ष्मीश्च॒ पत्न्यौ᳚। अ॒हो॒रा॒त्रे पा॒र्श्वे। नक्ष॑त्राणि रू॒पम्। अ॒श्विनौ॒ व्यात्त᳚म्। इ॒ष्टं म॑निषाण। अ॒मुं म॑निषाण। सर्वं॑ मनिषाण॥ १०॥

NAARAYANA SUUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ नारायणसूक्तम् ॥

॥ हरिः ओं ॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्। विश्वं नारायणं देवमक्षरं परमं प्रभुम्। विश्वतः परमं नित्यं विश्वं नारायणगं हरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति। पतिं विश्वस्यात्मेश्वरगं शाश्वतगं शिवमच्युतम्। नारायणं महाज्ञेयं विश्वात्मानं परायणम्। नारायणपरं ब्रह्म तत्वं नारायणः परः। नारायण परो ज्योतिरात्मा नारायणः परः। यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। अनन्तमव्ययं कविगं समुद्रेऽन्तं विश्वशंभुवम्। पद्म कोशप्रतीकाशगं हृदयं चाप्यधोमुखम्। अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्। सन्ततगं सिराभिस्तु लम्बत्या कोशसन्निभम्। तस्यान्ते सुषिरगं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्। तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः। सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः। सन्तापयति स्वं देहमापादतलमस्तकम्। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः। नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता भास्वात्यणूपमा। तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्मा स शिवस्सेन्द्रस्सोऽक्षरः परमस्स्वराट्॥

ऋतगं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः॥

ओं नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्॥

VISHNU SUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ विष्णुसूक्तम् ॥

॥ हरिः ओं॥ विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि यो अस्कंभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोश्श्नप्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा॥ १ ॥

तदस्य प्रियमभिपाथो अश्याम्। नरो यत्र देवयवो मदन्ति। उरुक्रमस्य स हि बन्धुरित्था। विष्णोः पदे परमे मध्व उत्सः। प्रतद्विष्णुस्स्तवते वीर्याय। मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेषु। अधिक्षियन्ति भुवनानि विश्वा। परो मात्रया तनुवा वृधान। न ते महित्वमन्वश्नुवन्ति॥ २ ॥

उभे ते विद्म रजसी पृथिव्या विष्णो देवत्वं। परमस्य विथ्से। विचक्रमे पृथिवीमेष एताम्। क्षेत्राय विष्णुर्मनुषे दशस्यन्। ध्रुवासो अस्य कीरयो जनासः। उरुक्षितिगं सुजनिमाचकार। त्रिर्देवः पृथिवीमेष एताम्। विचक्रमे शतर्चसं महित्वा। प्रविष्णुरस्तु तवसस्तवीयान्। त्वेषग्गं ह्यस्य स्थविरस्य नाम॥ ३ ॥

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्यास्सप्तधामभिः। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। ततो धर्माणि धारयन्। विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यस्सखा॥ ४ ॥

तद्विष्णोः परमं पदगं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवागं सस्समिन्धते। विष्णोर्यत्परमं पदम्॥ ५॥

SRI SUUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीसूक्तम् ॥

॥ हरिः ओं ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥ अश्वपूर्वां रथमध्यां हस्तिनाद प्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मादेवी जुषताम्॥ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां त्वामिहोपह्वये श्रियम्॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे॥ आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोथ बिल्वः। तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीर्नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीगं सर्वभूतानां तामिहोपह्वये श्रियम्॥

मनसः काममाकूतिं वाचस्सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीश्श्रयतां यशः॥ कर्दमेन प्रजा भूता मयि संभव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले। आर्द्रां पुष्करिणीं पुष्टिं पिङ्गळां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह। तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्॥ पद्मप्रिये पद्मि-

नि पद्महस्ते पद्मालये पद्मदळायताक्षि। विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व॥ श्रियै जात श्रिय आनिर्याय श्रियं वयो जनितृभ्यो दधातु। श्रियं वसाना अमृतत्वमायन् भवन्ति सद्यस्समिधा मितद्रून्॥ श्रिय एवैनं तच्छ्रियामादधाति। सन्ततमृचा वषट्कृत्यं सन्धत्तं सन्धीयते प्रजया पशुभिः। य एवं वेद॥ ओं महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मीः प्रचोदयात्॥

BHUUSUUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ भूसूक्तम् ॥

॥ हरिः ओं ॥ भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा। उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे। आऽयङ्गौः पृश्निरक्रमी दसनन्मातरं पुनः। पितरं च प्रयन्त्सुवः। त्रिग्ं शद्धाम विराजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्य वह द्युभिः। अस्य प्राणादपानत्यन्तश्चरति रोचना। व्यख्यन् महिषः सुवः। यत्वा क्रुद्धः परो वप मन्युना यदवर्त्या। सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि। यत्ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे। आदित्या विश्वे तद्देवा वसवश्च समाभरन्।

मेदिनी देवी वसुन्धरा स्याद्वसुधा देवी वासवी। ब्रह्मवर्चसः पितृणां श्रोत्रं चक्षुर्मनः। देवी हिरण्यगर्भिणी देवी प्रसूवरी। रसने सत्यायने सीद। समुद्रवती सावित्री हनो देवी मह्यगी। महोधरणी महो ध्यतिष्ठाः शृङ्गे शृङ्गे यज्ञे यज्ञे विभीषिणी। इन्द्रपत्नी व्यापिनी सुरसरिदिह। वायुमती जलशयनी श्रियंधा राजा सत्यन्धो परिमेदिनी। श्वोपरिधत्तं गाय।

विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम्। लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युत वल्लभाम्।

ओं धनुर्धरायै विद्महे सर्वसिद्ध्यै च धीमहि। तन्नो धरा प्रचोदयात्॥ शृण्वन्ति श्रोणाममृतस्य गोपाम्। पुण्यामस्या उपशृणोमि वाचम्। महीं देवीं विष्णुपत्नीमजूर्याम्। प्रतीचीं मेनाग्ं हविषा यजामः। त्रेधा विष्णुरुरुगायो विचक्रमे। महीं दिवं पृथिवीमन्तरिक्षम्। तच्छ्रोणैति श्रव इच्छमाना। पुण्यग्ं श्लोकं यजमानाय कृण्वती॥

NELASUUKTAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ नीळासूक्तम् ॥

॥ हरिः ओं ॥ नीळां देवीगं शरणमहं प्रपद्ये सुतरसि तरसे नमः। गृणाहि। घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशानो अस्तु। ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता। बृहस्पतिर्मातरिश्वोत वायुस्सन्धुवाना वाता अभि नो गृणन्तु। विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी। विश्वव्यचा इषयन्ती सुभूतिश्शिवानो अस्त्वदितिरुपस्थे। ओं महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो नीळा प्रचोदयात्॥

SHANTI PANCHAKAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ शान्ति पञ्चकम् ॥

शन्नो मित्रश्शंवरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ओं शान्तिश्शान्तिश्शान्तिः॥

शन्नो मित्रश्शंवरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ओं शान्तिश्शान्तिश्शान्तिः॥

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै। ओं शान्तिश्शान्तिश्शान्तिः॥

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मामामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यासगं शिवामदस्तां जुष्टाँन् देवेभ्यश्शर्म मे द्यौश्शर्मपृथिवी शर्म विश्वमिदं जगत्। शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्म प्रजापती। भुतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि

मधुमतीं देवेभ्यो वाचमुद्यासगं शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु। ओं शान्तिश्शान्तिश्शान्तिः॥

तच्छं योरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजम्। शन्नो अस्तु द्विपदे। शञ्चतुष्पदे। ओं शान्तिश्शान्तिश्शान्तिः॥

श्रीः
श्रीमते रामानुजाय नमः

# ॥ वॆण्णॆय्यळैन्द ॥

## नीराट्टल्

‡वॆण्णॆय् अळैन्द कुणुङ्गुम्⋆ विळैयाडु पुऴुदियुम् कॊण्डु⋆
तिण्णॆन इव्विरा उन्नै⋆ त्तेय्त्तु क्किडक्क नानॊट्टेन्⋆
ऎण्णॆय् प्पुळिप्पऴम् कॊण्डु⋆ इङ्गॆत्तनै पोदुम् इरुन्देन्⋆
नण्णल् अरिय पिराने!⋆ नारणा! नीराड वाराय्॥१॥

कन्ऱुगळ् ओड च्चॆवियिल्⋆ कट्टॆरुम्बु पिडित्तिट्टाल्⋆
तॆन्ऱि क्कॆडुमागिल्⋆ वॆण्णॆय् तिरट्टि विऴुङ्गुमा काण्बन्⋆
निन्ऱ मरामरम् शाय्त्ताय्!⋆ नी पिऱन्द तिरुवोणम्⋆
इन्ऱु नी नीराड वेण्डुम्⋆ ऎम्पिरान्! ओडादे वाराय्॥२॥

पेय्च्चि मुलै उण्ण क्कण्डु⋆ पिन्नैयुम् निल्लादॆन् नॆञ्जम्⋆
आय्च्चियर् ऎल्लारुम् कूडि⋆ अऴैक्कवुम् नान् मुलै तन्देन्⋆
काय्च्चिन नीरॊडु नॆल्लि⋆ कडारत्तिल् पूरित्तु वैत्तेन्⋆
वाय्त्त पुगऴ् मणिवण्णा!⋆ मञ्जनम् आड नी वाराय्॥३॥

---

**Attention:** New letters have been introduced to facilitate reading Tamil texts in Devanaagarii. Distinction has been made between certain short and long consonants that do not exist in Devanaagarii. For e.g., नॆ and ने should be treated with the same distinction as that exists between नि and नी. The letters ऎ and ए, and ऒ and ओ, should be treated in the same way. The letter ऴ denotes the *za* in Tamil. For e.g., *aazvaar* would be written as आऴ्वार् in Devanaagarii. There is a subtle difference between ऱ and र, however, they can be pronounced in the same way. Also note that ट्ट sounds almost like ट्, ट्टि like ट्टि, and so on. The consonant-cluster न्ऱ is pronounced somewhere between न्र and न्ड्. It is, however, colloquially acceptable to pronounce the clusters ट्ट and न्ऱ as त्त and न्न, respectively.

कञ्जन् पुणर्प्पिनिल् वन्द⋆ कडिय शकडम् उदैत्तु⋆
वञ्जग प्पेय्मगळ् तुञ्ज⋆ वाय् मुलै वैत्त पिराने !⋆
मञ्जळुम् शॆङ्गऴु नीरिन्⋆ वाशिगैयुम् नारु शान्दुम्⋆
अञ्जनमुम् कॊण्डु वैत्तेन्⋆ अळगने ! नीराड वाराय्॥ ४ ॥

अप्पम् कलन्द शिट्टुण्डि⋆ अक्कारम् पालिल् कलन्दु⋆
शॊप्पड नान् शुट्टु वैत्तेन्⋆ तिन्नल् उरुदियेल् नम्बि !⋆
शॆप्पिळ मॆन्मुलै यार्गळ्⋆ शिरुपुरम् पेशि च्चिरिप्पर्⋆
शॊप्पड नीराड वेण्डुम्⋆ शोत्तम् पिरान् ! इङ्गे वाराय्॥ ५ ॥

ऎण्णॆय् क्कुडत्तै उरुट्टि⋆ इळम् पिळ्ळै किळ्ळि यॆऴुप्पि⋆
कण्णै प्पुरट्टि विऴित्तु⋆ क्कळकण्डु शॆय्युम् पिराने !⋆
उण्ण क्कनिगळ् तरुवन्⋆ ऒलिकडल् ओद नीर् पोले⋆
वण्णम् अऴकिय नम्बी !⋆ मञ्जनम् आड नी वाराय्॥ ६ ॥

करन्द नल् पालुम् तयिरुम्⋆ कडैन्दुरिमेल् वैत्त वॆण्णॆय्⋆
पिरन्ददुवे मुदलाग⋆ प्पॆट्टरियेन् ऎम्पिराने !⋆
शिरन्द नल् ताय् अलर् तूट्टुम्⋆ ऎन्बदनाल् पिरर् मुन्ने⋆
मरन्दुम् उरैयाड माट्टेन्⋆ मञ्जनम् आड नी वाराय्॥ ७ ॥

कन्रिनै वाल् ओलै कट्टि⋆ क्कनिगळ् उदिर ऎरिन्दु⋆
पिन् तॊडरन्दोडि ओर् पाम्बै⋆ प्पिडित्तु क्कॊण्डाट्टिनाय् पोलुम्⋆
निन् तिरत्तेन् अल्लेन् नम्बि !⋆ नी पिरन्द तिरु नन्नाळ्⋆
नन्रु नी नीराड वेण्डुम्⋆ नारणा ! ओडादे वाराय्॥ ८ ॥

पूणि तॊऴुविनिल् पुक्कु⋆ प्पुऴुदि अळैन्द पॊन्मेनि⋆
काण प्पॆरिदुम् उगप्पन्⋆ आगिलुम् कण्डार् पऴिप्पर्⋆
नाण् इत्तनैयुम् इलादाय् !⋆ नप्पिन्नै काणिल् शिरिक्कुम्⋆
माणिक्कमे ! ऎन् मणिये !⋆ मञ्जनम् आड नी वाराय्॥ ९ ॥

‡कार्मलि मेनि निरत्तु⋆ क्कण्ण पिरानै उगन्दु⋆
वार्मलि कॊङ्गै यशोदै⋆ मञ्जनम् आट्टिय आट्टै⋆

पार् मलि तॊल् पुदुवै क्कोन्* पट्टर् पिरान् शॊन्न पाडल्*
शीर् मलि शॆन् तमिऴ् वल्लार्* तीविनै यादुम् इलरे॥१०॥

॥ पॆरियाऴ्वार् तिरुवडिगळे शरणं ॥

SRI SUDARSHANASTAKAM

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीसुदर्शनाष्टकम् ॥

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

प्रतिभट श्रेणि भीषण वर गुण स्तोम भूषण
जनि भय स्थान तारण जगदवस्थान कारण।
निखिल दुष्कर्म कर्शन निगम सद्धर्म दर्शन
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन॥ १ ॥

शुभ जगद्रूप मण्डन सुर गण त्रास खण्डन
शतमख ब्रह्म वन्दित शतपथ ब्रह्म नन्दित।
प्रथित विद्वत्सपक्षित भजदहिर्बुध्न्य लक्षित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन॥ २ ॥

स्फुट तटिज्जाल पिञ्जर पृथुतर ज्वाल पञ्जर
परिगत प्रत्न विग्रह पटुतर प्रज्ञ दुर्ग्रह।
प्रहरण ग्राम मण्डित परिजन त्राण पण्डित
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन॥ ३ ॥

निज पद प्रीत सद्गण निरुपधि स्फीत षड्गुण
निगम निर्व्यूढ वैभव निज पर व्यूह वैभव।
हरि हय द्वेषि दारण हर पुर प्लोष कारण
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन॥ ४ ॥

दनुज विस्तार कर्तन जनि तमिस्रा विकर्तन
दनुज विद्या निकर्तन भजदविद्या निवर्तन।
अमर दृष्ट स्व विक्रम समर जुष्ट भ्रमि क्रम
जय जय श्रीसुदर्शन जय जय श्रीसुदर्शन॥ ५ ॥

प्रतिमुखालीढ बन्धुर
विकट माया बहिष्कृत
स्थिर महायन्त्र तन्त्रित
जय जय श्रीसुदर्शन

पृथु महा हेति दन्तुर
विविध माला परिष्कृत।
दृढ दया तन्त्र यन्त्रित
जय जय श्रीसुदर्शन॥ ६ ॥

महित संपत्सदक्षर
षडर चक्र प्रतिष्ठित
विविध सङ्कल्प कल्पक
जय जय श्रीसुदर्शन

विहित संपत्षडक्षर
सकल तत्त्व प्रतिष्ठित।
विबुध सङ्कल्प कल्पक
जय जय श्रीसुदर्शन॥ ७ ॥

भुवन नेत्र त्रयीमय
निरवधि स्वादु चिन्मय
अमित विश्व क्रियामय
जय जय श्रीसुदर्शन

सवन तेजस्त्रयीमय
निखिल शक्ते जगन्मय।
शमित विष्वग्भयामय
जय जय श्रीसुदर्शन॥ ८ ॥

द्विचतुष्कमिदं प्रभूत सारं पठतां वेङ्कटनायक प्रणीतम्।
विषमेऽपि मनोरथः प्रधावन् न विहन्येत रथाङ्ग धुर्य गुप्तः ॥ ९ ॥

॥ इति श्रीसुदर्शनाष्टकं समाप्तम् ॥

कवितार्किकसिंहाय कल्याणगुणशालिने।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

ओं नमो नारायणाय पुष्पं समर्पयामि ।

ओं नमो नारायणाय तुलसीदळं समर्पयामि ॥

திருமணி சேவித்துக்கொண்டே,
*ஓம் நமோ நாராயணாய தூபம் ஆக்ராபயாமி*
*ஓம் நமோ நாராயணாய தீபம் தர்சயாமி*

घण्टा

ओं नमो नारायणाय धूपं आघ्रापयामि ।

ओं नमो नारायणाय दीपं दर्शयामि ॥

உ. மந்த்ர புஷ்பம் मन्त्रपुष्पम्

(முடிந்த பொழுது சொல்லவும்)
சதுர் வேதம்
*ஹரி: ஓம்/ அக்னிமீளே புரோஹிதம் /*
*யஜ்ஞஸ்ய தேவம் ருத்விஜம் /*
*ஹோதாரம் ரத்னதாதமம் //*
*ஹரி: ஓம் / ஹரி: ஓம் /*

*இஷேத்வோர்ஜேத்வா*
*வாயவஸ்தோபாயவஸ்த*
*தேவோ வஸ்ஸவிதா*
*ப்ரார்பயது ஶ்ரேஷ்டதமாய*
*கர்மணே// ஹரி: ஓம்/ ஹரி: ஓம் /*

*அக்ந ஆயாஹி வீதயே க்ருணானோ*
*ஹவ்யதாதயே/ நிஹோதா ஸத்ஸி*
*பர்ஹிஷி// ஹரி: ஓம்/ ஹரி: ஓம்/*

*ஶன்னோ தேவீரபிஷ்டய*
*ஆபோபவந்து பீதயே /*
*ஶம்யோரபிஸ்ரவந்து ந://*
*ஹரி: ஓம் / ஹரி: ஓம் /*

(அல்லது காயத்ரீ மந்த்ரம் गायत्री मन्त्रम् 4 தடவை சொல்லவும்)
உபநிஷத்
*ஓமித்யக்ரே வ்யாஹரேத் / நம இதி*
*பஶ்சாத் / நாராயணாயேத்யுபரிஷ்டாத் /*
*ஓமித்யேகாக்ஷரம் / நம இதி த்வே அக்ஷரே /*
*நாராயணாயேதி பஞ்சாக்ஷராணி / ஏதத்வை*
*நாராயண ஸ்யாஷ்டாக்ஷரம் பதம் / யோ ஹ வை*
*நாராயண ஸ்யாஷ்டாக்ஷரம் பதமத்யேதி /*
*அனபப்ருவஸ் ஸர்வமாயுரேதி/ விந்ததே*
*ப்ராஜாபத்யம் ராயஸ்போஷம் கௌபத்யம் /*
*ததோ஽ம்ருதத்வமஶ்னுதே ததோ஽ம்ருதத்வமஶ்னுத*
*இதி/ ய ஏவம் வேத/ இத்யுபனிஷத்//*

க்ருஹ்யஸூத்ரம்

*அத கர்மாண்யா சாராத்யானி க்ருஹ்யந்தே|*
*உதகயன பூர்வபக்ஷாஹ: புண்யாஹேஷு*
*கார்யாணி யஜ்ஞோப வீதினா ப்ரதக்ஷிணம்||*

ஸ்ரீமத்ராமாயணம்

*இச்சாமோ ஹி மஹாபாஹும் ரகுவீரம் மஹாபலம்|*
*கஜேன மஹதாऽऽயாந்தம் ராமம் சத்ராவ்ருதானனம்||*

*தம் த்ருஷ்ட்வா ஶத்ருஹந்தாரம் மஹர்ஷீணாம் ஸுகாவஹம்|*
*பபூவ ஹ்ருஷ்டா வைதேஹீ பர்த்தாரம் பரிஷஸ்வஜே ||*

ஸ்ரீவிஷ்ணுபுராணம்

*தாஸாமாவிரபூத் ஶௌரி: ஸ்மயமான முகாம்புஜ: |*
*பீதாம்பரதரஸ்ரக்வீ ஸாக்ஷான் மன்மத மன்மத: ||*

ஸ்ரீ பகவத் கீதை

*தர்மக்ஷேத்ரே குருக்ஷேத்ரே ஸமவேதா யுயுத்ஸவ: |*
*மாமகா: பாண்டவாஶ்சைவ கிமகுர்வத ஸஞ்சய ! ||*

*ஸ்ரீகுணரத்னகோசம்*

*உல்லாச பல்லவிதபாலித சப்தலோகீ*
*நிர்வாஹகோரகித நேமகடாக்ஷலீலாம் |*
*ஸ்ரீரங்க ஹர்ம்யதல மங்கலதீபரேகாம்*
*ஸ்ரீரங்கராஜமஹிஷீம் ஶ்ரியமா ஶ்ரயாம: ||*

॥ऋग्वेदः॥

हरिः ओम्। अग्निमीळे पुरोहितं यज्ञस्य

देवमृत्विजम्। होतारं रत्नधातमम्। हरिः ओम्॥

॥यजुर्वेदः॥

हरिः ओम्। इषे त्वोर्जे त्वा वायवस्थो पायवस्थ

देवो वस्सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे॥ हरिः ओम्॥

॥सामवेदः॥

हरिः ओम्। अग्नआयाहि वीतये गृणानो हव्यदातये।

निहोता सत्सि बर्हिषि॥ हरिः ओम्॥

॥अथर्ववेदः॥

हरिः ओम्। शन्नो देविरभिष्टय

आपो भवन्तु पीतये। शं योरभिस्रवन्तु नः॥ हरिः ओम्॥

॥उपनिषत्॥

ओमित्यग्रे व्याहरेत्। नम इति पश्चात्। नारायणायेत्युपरिष्टात्। ओमित्येकाक्षरम्।
नम इति द्वे अक्षरे। नारायणायेति पञ्चाक्षराणि। एतद्वै नारायणस्याष्टाक्षरं
पदम्। यो ह वै नारायणस्याष्टाक्षरं पदमध्येति। अनपब्रुवस्सर्वमायुरेति।
विन्दते प्राजापत्यं रायस्पोषं गौपत्यम्। ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत
इति। य एवं वेद। इत्युपनिषत्॥

॥गृह्यसूत्रम् ॥

अथ कर्माण्याचाराद्यानि गृह्यन्ते। उदगयन पूर्वपक्षाहः पुण्याहेषु
कार्याणि यज्ञोपवीतिना प्रदक्षिणम्॥

॥श्रीमद्रामायणम् ॥

इच्छामोहि महबाहुम् रघुवीरं महाबलम्।
गजेन महताऽऽयान्तम् रामं छत्रावृताननम् ॥
तं दृष्ट्वा शत्रुहन्तारम् महीर्षीणां सुखावहम्।
बभूव हृष्टा वैदेही भर्तारं परिषस्वजे॥

॥श्रीविष्णुपुराणम् ॥

तासामाविरभूत् शौरिः स्मयमान मुखाम्बुजः।
पीताम्बरधरस्रग्वी साक्षान् मन्मत मन्मतः॥

॥श्री भगवद्गीता॥

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय॥

॥श्रीगुणरत्नकोसम् ॥

उद्वास पहुविदपालित सप्तलोकी
निर्वाहकोरकित नेमकटाक्ष लीलाम्।
श्रीरङ्ग हर्म्यतल मङ्गलदीपरेखाम्
श्रीरङ्गराज महिषीम् श्रिय माश्रयामः॥

**[தேசிகப்பிரபந்தம் – திருச்சின்னமாலை 10ம் பாசுரம்]**

**அத்திகிரி அருளாளப் பெருமாள் வந்தார்**
**ஆனை பரிதேரின் மேல் அழகர் வந்தார் ***

**கச்சிதனில் கண்கொடுக்கும் பெருமாள் வந்தார்**
**கருத வரம் தரும் தெய்வப்பெருமாள் வந்தார் ***
**முத்திமழை பொழியுமுகில் வண்ணர் வந்தார்**
**மூலமென ஓலமிட வல்லார் வந்தார் ***
**உத்தரவேதிக்குள்ளே உதித்தார் வந்தார்**
**உம்பர் தொழும் கழலுடையார் வந்தார் தாமே.**

முதல் திருவந்தாதி (53)

**சென்றால்குடையாம் இருந்தால் சிங்காசனமாம் ***
**நின்றால்மரவடியாம் நீள்கடலுள் * என்றும்**
**புணையாம் மணிவிளக்காம் பூம்பட்டாம்**
**புல்கும் அணையாம் * திருமாற்கு அரவு.**

ஸ்தோத்ரரத்னம் (31)

*கதா புன: ஶங்க ரதாங்க கல்பக*
*த்வஜாரவிந்தாங்குஶ வஜ்ரலாஞ்சனம் /*
*த்ரிவிக்ரம தவச்சரணாம்புஜத்வயம்*
*மதீய மூர்தானமலங்கரிஷ்யதி //*

ந்யாஸ திலகம் (1)

*குருப்ய: தத்குருப்யஶ்ச நமோவாகமதீமஹே /*
*வ்ருணீமஹே ச தத்ராத்யௌ தம்பதீ ஜகதாம்பதீ//*

யதிராஜ ஸப்ததி (1)

*கமப்யாத்யம் குரும் வந்தே*
*கமலா க்ருஹமேதினம்/*
*ப்ரவக்தாச்சந்தஸாம் வக்தா*
*பஞ்சராத்ரஸ்ய ய: ஸ்வயம்//*

॥श्रीस्तोत्ररत्नम् -३१ ॥

कदा पुनः शङ्ख रथाङ्ग कल्पक

ध्वजारविन्दाङ्कुश वज्रलाञ्छनम् ।

त्रिविक्रम तवच्चरणाम्बुजद्वयं

मदीय मूर्धान मलङ्करिष्यति ॥

॥श्रीन्यासतिलकम् १ ॥

गुरुभ्यः तद्गुरुभ्यश्च नमोवाकं अधीमहे ।

वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥

॥श्रीयतिराजसप्ततिः १ ॥

कमप्याद्यं गुरुं वन्दे कमला गृहमेधिनम् ।

प्रवक्ता च्छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥

அர்ச்சனை अर्चना

**புஷ்பத்தாலும், துளஸியாலும் அர்ச்சனை செய்யவும்.**

*ஓம் நமோ நாராயணாய*

*ஓம் வாஸுதேவாய நம:*
*ஓம் ஸங்கர்ஷணாய நம:*
*ஓம் ப்ரத்யும்னாய நம:*
*ஓம் அனிருத்தாய நம:*

*ஓம் கேசவாய நம:*
*ஓம் நாராயணாய நம:*
*ஓம் மாதவாய நம:*
*ஓம் கோவிந்தாய நம:*
*ஓம் விஷ்ணவே நம:*
*ஓம் மதுஸூதனாய நம:*
*ஓம் த்ரிவிக்ரமாய நம:*
*ஓம் வாமனாய நம:*
*ஓம் ஸ்ரீதராய நம:*
*ஓம் ஹ்ருஷீகேசாய நம:*
*ஓம் பத்மனாபாய நம:*
*ஓம் தாமோதராய நம:*

*ஓம் மத்ஸ்யாய நம:*
*ஓம் கூர்மாய நம:*
*ஓம் வராஹாய நம:*
*ஓம் நாரஸிம்ஹாய நம:*
*ஓம் வாமனாய நம:*
*ஓம் பார்கவராமாய நம:*
*ஓம் ஸ்ரீராமாய நம:*
*ஓம் பலராமாய நம:*
*ஓம் க்ருஷ்ணாய நம:*
*ஓம் கல்கினே நம:*

*ஓம் ச்ரியை நம:*
*ஓம் அம்ருதோத்பவாயை நம:*
*ஓம் கமலாயை நம:*
*ஓம் சந்த்ரஸஹோதர்யை நம:*
*ஓம் விஷ்ணுபத்ன்யை நம:*
*ஓம் வைஷ்ணவ்யை நம:*
*ஓம் வராரோஹாயை நம:*
*ஓம் ஹரிவல்லபாயை நம:*
*ஓம் சார்ங்கிண்யை நம:*
*ஓம் தேவதேவ்யை நம:*
*ஓம் மஹாலக்ஷ்ம்யை நம:*
*ஓம் ஸுரஸுந்தர்யை நம:*

*ஓம் ஸ்ரீ பூமிநீளா ஸமேத ஸ்ரீமந் நாராயணாய நம:*

ओं नमो नारायणाय

ओं वासुदेवाय नमः।

ओं संकर्षणाय नमः।

ओं प्रद्युम्नाय नमः।

ओं अनिरुद्धाय नमः।

ओं केशवाय नमः।

ओं नारायणाय नमः।

ओं माधवाय नमः।

ओं गोविन्दाय नमः।

ओं विष्णवे नमः।

ओं मधुसूदनाय नमः।

ओं त्रिविक्रमाय नमः।

ओं वामनाय नमः।

ओं श्रीधराय नमः।

ओं हृषीकेशाय नमः।

ओं पद्मनाभाय नमः।

ओं दामोदराय नमः।

ओं मत्स्याय नमः।

ओं कूर्माय नमः।

ओं वराहाय नमः।

ओं नारसिंहाय नमः।

ओं वामनाय नमः।

ओं भार्गवरामाय नमः।

ओं श्रीरामाय नमः।

ओं बलरामाय नमः।

ओं कृष्णाय नमः।

ओं कल्किने नमः।

ओं श्रियै नमः।

ओं अमृतोद्भवायै नमः।

ओं कमलायै नमः।

ओं चन्द्रसहोदर्यै नमः।

ओं विष्णुपत्न्यै नमः।

ओं वैष्णव्यै नमः।

ओं वरारोहायै नमः।

ओं हरिवल्लभायै नमः।

ओं शार्ङ्गिण्यै नमः।

ओं देवदेव्यै नमः।

ओं महालक्ष्मै नमः।

ओं सुरसुन्दर्यै नमः।

ओं श्रीभूमि नीळा समेत श्रीमन्नारायणाय नमः॥

(இங்கு திவ்யப்பிரபந்தம், இராமாயணம், அஷ்டோத்ர, ஸஹஸ்ர நாமாவளிகள் சேவிக்கலாம்)

**பெருமாளுக்கு தளிகை போஜ்யாஸனம் செய்விக்கவும்.**

**ஊ. போஜ்யாஸனம் भोज्यासनम्**

***ப்ராப்யந்து ப்ராபணேகாலே பதத்யானீத ஏஷ தே |***
***ம்ருஷ்டமேத்ய ஸ்திரான்னானி பக்ஷ்ய போஜ்யான்யனேகஶ:|***
***ஸம்பன்னானி ஜகன்னாத போஜ்யாஸனம் உபாஶ்ரய ||***

प्राप्यन्तु प्रापणेकाले पदत्यानीत एष ते।

मृष्टमेध्य स्थिरान्नानि भक्ष्य भोज्यान्यनेकशः।

सम्पन्नानि जगन्नाथ भोज्यासनं उपाश्रय॥

ओं नमो नारायणाय भोज्यासनं समर्पयामि।

***ஓம் நமோ நாராயணாய போஜ்யாஸனம் ஸமர்ப்பயாமி***

ओं नमो नारायणाय अर्घ्यम् समर्पयामि।

***ஓம் நமோ நாராயணாய அர்க்யம் ஸமர்ப்பயாமி*** **– ஒரு (1) தடவை ஸமர்ப்பிக்கவும்**

श्रीः
श्रीमते रामानुजाय नमः

# ॥ शाट्ऱुमुऱै ॥

(वडगलै संप्रदायम्)

शिट्ऱम् शिऱुगाले वन्दुन्नै च्चेवित्तु⋆ उन्
पॊट्ऱामरै अडिये पोट्ऱुम् पॊरुळ् केळाय्⋆
पॆट्ऱम् मेय्त्तुण्णुम् कुलत्तिल् पिऱन्दु⋆ नी
कुट्ऱेवल् ऎङ्गळै क्कॊळ्ळामल् पोगादु⋆
इट्ऱै प्पऱै कॊळ्वान् अन्ऱुगाण् गोविन्दा !⋆
ऎट्ऱैक्कुम् एऴेऴ् पिऱविक्कुम्⋆ उन्ऱन्नो-
डुट्ऱोमेयावोम् उनक्के नाम् आट्चॆय्वोम्⋆
मट्ऱै नम् कामङ्गळ् माट्ऱेलोर् ऎम्बावाय्

वङ्ग क्कडल् कडैन्द मादवनै क्केशवनै⋆
तिङ्गळ् तिरुमुगत्तु च्चेयिऴैयार् शॆन्ऱिऱैञ्जि⋆
अङ्ग प्पऱै कॊण्डवाट्ऱै⋆ अणि पुदुवै
प्पैङ्गमल त्तण् तॆरियल् पट्टर्बिरान् कोदै शॊन्न⋆
शङ्ग त्तमिऴ्मालै मुप्पदुम् तप्पामे⋆
इङ्गिप्परिशुरैप्पार् ईरिरण्डु माल् वरै त्तोळ्⋆

---

**Attention:** New letters have been introduced to facilitate reading Tamil texts in Devanaagarii. Distinction has been made between certain short and long consonants that do not exist in Devanaagarii. For e.g., नॆ and ने should be treated with the same distinction as that exists between नि and नी. The letters ऎ and ए, and ऒ and ओ, should be treated in the same way. The letter ऴ denotes the *za* in Tamil. For e.g., *aazvaar* would be written as आऴ्वार् in Devanaagarii. There is a subtle difference between ऱ and र, however, they can be pronounced in the same way. Also note that ट्ऱ sounds almost like ट्र, ट्ऱि like ट्रि, and so on. The consonant-cluster न्ऱ is pronounced somewhere between न्र and न्ड्र. It is, however, colloquially acceptable to pronounce the clusters ट्ऱ and न्ऱ as त्त and न्न, respectively.

शॆङ्गण् तिरुमुगत्तु च्चॆल्व त्तिरुमालाल्*
 एङ्गुम् तिरुवरुळ् पॆट्रिन्बुरुवर् एम्बावाय्

पल्लाण्डु पल्लाण्डु पल्लायिरत्ताण्डु* पल कोडि नूरायिरम्*
मल्लाण्ड तिण्तोळ् मणिवण्णा ! * उन्शेवडि शॆव्वि तिरुक्काप्पु

अडियोमोडुम् निन्नोडुम्* पिरिविन्रि आयिरम् पल्लाण्डु*
 वडिवाय् निन्वल मार्बिनिल्* वाळिन्र मङ्गैयुम् पल्लाण्डु*
वडिवार् शोदि वलत्तुरैयुम्* शुडराळियुम् पल्लाण्डु*
 पडैपोर् पुक्कु मुळङ्गुम्* अप्पाञ्चजन्नियमुम् पल्लाण्डे

सर्वदेशदशाकालेष्वव्याहतपराक्रमा।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धतां॥

रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला।
दिगन्तव्यापिनी भूयात्सा हि लोकहितैषिणी॥

श्रीमन् श्रीरङ्गश्रियमनुपद्रवामनुदिनं संवर्धय।
श्रीमन् श्रीरङ्गश्रियमनुपद्रवामनुदिनं संवर्धय॥

नमो रामानुजार्याय वेदान्तार्थप्रदायिने।
आत्रेयपद्मनाभार्यसुताय गुणशालिने॥

रामानुजदयापात्रं ज्ञानवैराग्यभूषणम्।
श्रीमद्वेङ्कटनाथार्यं वन्दे वेदान्तदेशिकं॥

वाळि इरामनुज प्पिळ्ळान् मादगवाल्
 वाळुम्* अणिनिगमान्तगुरु – वाळियवन्*
मारन् मरैयुम् इरामानुजन् भाषियमुम्
 तेरुम् पडियुरैक्कुम् शीर्

वञ्ज प्परशमयम् माट्रवन्दोन् वाळिये*
 मन्नुपुगळ् प्पूदूरान् मनमुगप्पोन् वाळिये*

कञ्ज त्तिरुमङ्गै उगक्कवन्दोन् वाळियॆ⋆
कलियनुरै कुडिकॊण्ड करुत्तुडैयोन् वाळियॆ⋆
शॆञ्जॊल् तमिळ्मरैगळ् तॆळिन्दुरैप्पोन् वाळियॆ⋆
तिरुमलैमाल् तिरुमणियाय् च्चिरक्कवन्दोन् वाळियॆ⋆
तञ्ज प्परगतियै त्तन्दरुळ्वोन् वाळियॆ⋆
शॆन्दमिळ् त्तूप्पुल् तिरुवेङ्गडवन् वाळियॆ

नानिलमुन् तान्वाळ नान्मरैगळ् ताम्वाळ⋆
मानगरिन् मारन् मरैवाळ⋆ – ञानियर्गळ्
शॆन्नियणि शेर् तूप्पुल् वेदान्त देशिकने
इन्नुमॊरु नूट्राण्डिरुम्

वाळियणि तूप्पुल् वरु निगमान्ताशिरियन्⋆
वाळियवन् पादारविन्दमलर्⋆ – वाळियवन्
कोदिला ताण्मलरै क्कॊण्डाडि क्कॊण्डिरुक्कुम्
तीदिला नल्लोर् तिरळ्

वादाशनवर रिवॆरॆन वरुमा पाडियम् वगैपॆरुनाळ्⋆
वकुळाबरण प्पॆरुमाळ् तमिळिन् वाशि अरिन्दिडुनाळ्⋆
बेदा बेदम् पिरममॆनावगै पिरमन् तॆळिवुरुनाळ्⋆
पेच्चॊन्रुक्कु च्चतदूषणियै प्पेशिय देशिकनाळ्⋆
तीदागिय बलमाय क्कलियै च्चिक्कॆन वॆन्रिडुनाळ्⋆
तिक्कॆट्टुम् पुगळ् श्रीभाषियत्तै तॆळियवुरै त्तिडुनाळ्⋆
ओदादोदुम् वेदान्तारियन् उदयम् शॆय्दिडुनाळ्⋆
उत्तममान पुरट्टाशि त्तिरुवोणम् ऎनुनाळे

कोदै पिरन्द ऊर् गोविन्दन् वाळुमूर्⋆
शोदि मणि माडम् तोन्रुम् ऊर्⋆ – नीदियाल्
नल्ल पत्तर् वाळुम् ऊर्⋆ नान्मरैगळ् ओदुमूर्⋆
विल्लिपुत्तुर् वेद क्कोनूर्⋆

पातगङ्गळ् तीर्क्कुम् परमन् अडि काट्टुम्⋆
वेदम् अनैत्तुक्कुम् वित्तागुम्⋆ कोदै तमिळ्
ऐयैन्दुम् ऐन्दुम् अरियाद मानिडरै⋆
वैयम् शुमप्पदुम् वम्बु

तिरुवाडि प्पूरत्तु जगत्तुदित्ताळ् वाळियॆ⋆
तिरुप्पावै मुप्पदुम् शॆप्पिनाळ् वाळियॆ⋆
पॆरियाळ्वार् पॆट्रॆडुत्त पॆण् पिळ्ळै वाळियॆ⋆
पॆरुम्बूदूर् मामुनिक्कु प्पिन्नानाळ् वाळियॆ⋆
ऒरु नूट्रु नार्बत्तु मून्रुरैत्ताळ् वाळियॆ⋆
उयर् अरङ्गर्के कण्णि उगन्दळित्ताळ् वाळियॆ⋆
मरुवारुम् तिरुमल्लि वळनाडि वाळियॆ⋆
वण् पुदुवै नगर् क्कोदै मलर् प्पदङ्गळ् वाळियॆ

॥ श्रीरार्तूप्पुल् तिरुवेङ्कडमुडैयान् तिरुवडिगळे शरणं ॥

शेङ्गण् तिरुमुगत्तु च्चॆल्व त्तिरुमालाल्⋆
  एङ्गुम् तिरुवरुळ् पॆढ्ढिन्बुरुवर् एम्बावाय्

पल्लाण्डु पल्लाण्डु पल्लायिरत्ताण्डु⋆ पल कोडि नूऱायिरम्⋆
मल्लाण्ड तिण्तोळ् मणिवण्णा ! ⋆ उन्शेवडि शॆव्वि तिरुक्काप्पु

अडियोमोडुम् निन्नोडुम्⋆ पिरिविन्ऱि आयिरम् पल्लाण्डु⋆
  वडिवाय् निन्वल मार्बिनिल्⋆ वाऴ्गिन्ऱ मङ्गैयुम् पल्लाण्डु⋆
वडिवार् शोदि वलत्तुऱैयुम्⋆ शुडराऴियुम् पल्लाण्डु⋆
  पडैपोर् पुक्कु मुऴङ्गुम्⋆ अप्पाञ्चजन्नियमुम् पल्लाण्डे

सर्वदेशदशाकालेष्वव्याहतपराक्रमा।
रामानुजार्यदिव्याज्ञा वर्धतामभिवर्धतां॥

रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला।
दिगन्तव्यापिनी भूयात्सा हि लोकहितैषिणी॥

श्रीमन् श्रीरङ्गश्रियमनुपद्रवामनुदिनं संवर्धय।
श्रीमन् श्रीरङ्गश्रियमनुपद्रवामनुदिनं संवर्धय॥

नमः श्रीशैलनाथाय कुन्तीनगर जन्मने।
प्रसादलब्ध परमप्राप्य कैङ्कर्यशालिने॥

श्रीशैलेश दयापात्रं धीभक्त्यादि गुणार्णवम्।
यतीन्द्र प्रवणम् वन्दे रम्य जामातरं मुनिम्॥

वाऴि तिरुवाय्मॊऴिप्पिळ्ळै मादगवाल्
  वाऴुम्⋆ मणवाळ मामुनिवन् – वाऴियवन्⋆
माऱन् तिरुवाय्मॊऴि प्पॊरुळै⋆ मानिलत्तॊर्
  तेरुम् पडियुरैक्कुम् शीर्

शॆय्य तामरै त्ताळिणै वाऴिये⋆
  शेलै वाऴि तिरुनाबि वाऴिये⋆

तुय्यमार्बुम् पुरिनूलुम् वाळियेॱ
शुन्दर त्तिरुत्तोळिणै वाळियेॱ
कैयुमेन्दिय मुक्कोलुम् वाळियेॱ
करुणै पोङ्गिय कण्णिणै वाळियेॱ
पोय्यिलाद मणवाळ मामुनिॱ
पुन्दि वाळि पुगळ् वाळि वाळिये

अडियार्गळ् वाळ अरङ्गनगर् वाळॱ
शडगोपन् तण्डमिळ् नूल् वाळॱ – कडल् शुळ्न्द
मन्नुलगम् वाळॱ मणवाळ मामुनिये !
इन्नुमोरु नूट्राण्डिरुम्

कोदै पिरन्द ऊर् गोविन्दन् वाळुमूर्ॱ
शोदि मणि माडम् तोन्रुम् ऊर्ॱ – नीदियाल्
नल्ल पत्तर् वाळुम् ऊर्ॱ नान्मरैगळ् ओदुमूर्ॱ
विल्लिपुत्तुर् वेद क्कोनूर्ॱ
पातगङ्गळ् तीर्क्कुम् परमन् अडि काट्टुम्ॱ
वेदम् अनैत्तुक्कुम् वित्तागुम्ॱ कोदै तमिळ्
ऐयैन्दुम् ऐन्दुम् अरियाद मानिडरैॱ
वैयम् शुमप्पदुम् वम्बु

तिरुवाडि प्पूरत्तु जगत्तुदित्ताळ् वाळियेॱ
तिरुप्पावै मुप्पदुम् शेप्पिनाळ् वाळियेॱ
पेरियाळ्वार् पेट्रेडुत्त पेण् पिळ्ळै वाळियेॱ
पेरुम्बूदूर् मामुनिक्कु प्पिन्नानाळ् वाळियेॱ
ओरु नूट्रु नार्बत्तु मून्रुरैत्ताळ् वाळियेॱ
उयर् अरङ्गर्के कण्णि उगन्दळित्ताळ् वाळियेॱ
मरुवारुम् तिरुमल्लि वळनाडि वाळियेॱ
वण् पुदुवै नगर् क्कोदै मलर् प्पदङ्गळ् वाळिये

॥ आळ्वार् एम्बेरुमानार् जीयर् तिरुवडिगळे शरणं ॥